चतुर्थः पाठः

# ØhMkL i /kkZ

**सर्वनामप्रयोगः**

**हुमा** – यूयं कुत्र गच्छथ?

**इन्दरः** – वयं विद्यालयं गच्छामः।



**फेकनः** – तत्र क्रीडास्पर्धाः सन्ति। वयं खेलिष्यामः।

**रामचरणः** – किं स्पर्धाः केवलं बालकेभ्यः एव सन्ति?

**प्रसन्ना** – नहि, बालिकाः अपि खेलिष्यन्ति।

**रामचरणः** – किं यूयं सर्वे एकस्मिन् दले स्थ? अथवा पृथक्-पृथक् दले?

**प्रसन्ना** – तत्र बालिकाः बालकाः च मिलित्वा खेलिष्यन्ति।

**फेकनः** – आम्, बैडमिंटन-क्रीडायां मम सहभागिनी जूली अस्ति।





**प्रसन्ना** – एतद् अतिरिक्तं कबड्डी, नियुद्धं, क्रिकेटं, पादकन्दुकं, हस्तकन्दुकं, चतुरङ्गः इत्यादयः स्पर्धाः भविष्यन्ति।



**इन्दरः** – हुमे! किं त्वं न क्रीडसि? तव भगिनी तु मम पक्षे क्रीडति।

**हुमा** – नहि, मह्यं चलचित्रं रोचते। परम् अत्र अहं दर्शकरूपेण स्थास्यामि।

**फेकनः** – अहो! पूरनः कुत्र अस्ति? किं सः कस्यामपि स्पर्धायां प्रतिभागी नास्ति?

**रामचरणः** – सः द्रष्टुं न शक्नोति। तस्मै अस्माकं विद्यालये पठनाय तु विशेषव्यवस्था वर्तते। परं क्रीडायै प्रबन्धः नास्ति।

**हुमा** – अयं कथमपि न न्यायसङ्गतः। पूरनः सक्षमः, परं प्रबन्धस्य अभावात् क्रीडितुं न शक्नोति।

**इन्दरः** – अस्माकं तादृशानि अनेकानि मित्राणि सन्ति। वस्तुतः तानि अन्यथासमर्थानि।

**फेकनः** – अतः वयं सर्वे प्राचार्यं मिलामः। तं कथयामः। शीघ्रमेव तेषां कृते व्यवस्था भविष्यति।









## शब्दार्थाः

| | | |
|---|---|---|
| **स्पर्धाः** – | प्रतियोगिताएँ | competitions |
| **यूयम्** – | तुम सब | you all |
| **वयम्** – | हम सब | we all |
| **खेलिष्यामः** – | खेलेंगे | shall play |
| **मिलित्वा** – | मिलकर | together |
| **नियुद्धम्** – | जूडो | judo |
| **पादकन्दुकम्** – | फुटबाल | football |
| **हस्तकन्दुकम्** – | वॉलीबाल | volleyball |
| **चतुरङ्गः** – | चेस | chess |
| **चलचित्रम्** – | सिनेमा | cinema |
| **स्थास्यामि** – | रहूँगी/रहूँगा | shall stay |
| **द्रष्टुम्** – | देखने के लिए | to see |
| **न्यायसङ्गतः** – | उचित | lawful, proper |
| **तादृशानि** – | वैसे | similar |
| **अन्यथासमर्थानि** – | भिन्न तरीके से योग्य | differently able |

अन्यथासमर्थः–यह शब्द वस्तुतः अंग्रेजी के differently able का बोधक है। जो प्रायशः विकलांग के लिये प्रयोग में लाया जा रहा है।









## अभ्यासः

**1. उच्चारणं कुरुत–**

| | | |
|---|---|---|
| अहम् | आवाम् | वयम् |
| माम् | आवाम् | अस्मान् |
| मम | आवयोः | अस्माकम् |
| त्वम् | युवाम् | यूयम् |
| त्वाम् | युवाम् | युष्मान् |
| तव | युवयोः | युष्माकम् |

**2. निर्देशानुसारं परिवर्तनं कुरुत–**

यथा– अहं क्रीडामि। – (बहुवचने) – **वयं क्रीडामः।**

(क) अहं नृत्यामि। – (बहुवचने) – ..............................

(ख) त्वं पठसि। – (बहुवचने) – ..............................

(ग) युवां गच्छथः। – (एकवचने) – ..............................

(घ) अस्माकं पुस्तकानि। – (एकवचने) – ..............................

(ङ) तव गृहम्। – (द्विवचने) – ..............................





**3. कोष्ठकात् उचितं शब्दं चित्वा रिक्तस्थानानि पूरयत-**

(क) .................... पठामि। (वयम्/अहम्)

(ख) .................... गच्छथः। (युवाम्/यूयम्)

(ग) एतत् .................... पुस्तकम्। (माम्/मम)

(घ) .................... क्रीडनकानि। (युष्मान्/युष्माकम्)

(ङ) .................... छात्रे स्वः। (वयम्/आवाम्)

**4. अधोलिखितानि पदानि आधृत्य सार्थकानि वाक्यानि रचयत-**

| | | |
|---|---|---|
| यूयम् | लेखं | पश्यामि |
| वयम् | शिक्षिकां | रचयामः |
| युवाम् | दूरदर्शनं | कथयिष्यथः |
| अहम् | कथां | पठिष्यावः |
| त्वम् | पुस्तकं | लेखिष्यसि |
| आवाम् | चित्राणि | नंस्यथ |

**5. उचितपदैः वाक्यनिर्माणं कुरुत-**

| | | | | | |
|---|---|---|---|---|---|
| मम | तव | आवयोः | युवयोः | अस्माकम् | युष्माकम् |

यथा- एषा **मम** पुस्तिका।

(क) एतत् .................... गृहम्।








(ख) ........................ मैत्री दृढा।

(ग) एषः ........................ विद्यालयः।

(घ) एषा ........................ अध्यापिका।

(ङ) भारतम् ........................ देशः।

(च) एतानि ........................ पुस्तकानि।

**6. वाक्यानि रचयत-**

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| (क) | त्वं लेखं लेखिष्यसि। | ......................................। | .............................। |
| (ख) | ..............................। | आवाम् वस्त्रे धारयिष्यावः। | .............................। |
| (ग) | अहं पुस्तकं पठिष्यामि। | ......................................। | .............................। |
| (घ) | ..............................। | ते फले खादिष्यथः। | .............................। |
| (ङ) | मम गृहं सुन्दरम्। | ......................................। | .............................। |
| (च) | ..............................। | ......................................। | यूयं गमिष्यथ। |





7. **एकवचनपदस्य बहुवचनपदं, बहुवचनपदस्य एकवचनपदं च लिखत–**

| | |
|---|---|
| **यथा–** **एषः** | **एते** |
| सः | ............... |
| ताः | ............... |
| त्वम् | ............... |
| एताः | ............... |
| तव | ............... |
| अस्माकम् | ............... |
| तानि | ............... |



